THE

PRINCESS OF WALES

SARASVATĪ BHAVANA TEXTS

No. 77

THE

# SUBHADRĀ PARIṆAYANAM

GOVERNMENT SANSKRIT LIBRARY,

BENARES

THE

PRINCESS OF WALES

# SARASVATĪ BHAVANA TEXTS

*No. 77*

—o—

EDITED

BY

MANGAL DEVA SHASTRI,

M. A., D. PHIL. (OXON.),

PRINCIPAL,

GOVT. SANSKRIT COLLEGE, BENARES

*Printed by*

*Jai Krishna Das Gupta*

*Vidya Vilas Press, Benares City.*

1938

# सुभद्रापरिणयनम्

नाम

छायानाटकम्



THE

# SUBHADRĀ PARIṆAYANAM

BY

VYĀSA RĀMA DEVA

EDITED FOR THE FIRST TIME,

WITH INTRODUCTION ETC.,

BY

Sāhityāchārya

PT. NĀRĀYAṆA SHASTRI KHISTE

Librarian I/C. Mss. Deptt.

Govt. Sanskrit College

1938

॥ श्रीः ॥

# उपोद्घातः

अथेदमुपक्रम्यते सुभद्रापरिणयनं नाम च्छायानाटकं संमुद्रच प्रकाशयितुम्—

(छायानाटकशब्दार्थः)—छायानाटकं तावन्नाटकच्छायात्मना परिकल्पिते काष्ठ-पुत्तलिकानृत्ये चित्रपटप्रदर्शने उपचर्यते, "छाया-नाटकं तावन्नाटकस्य बाह्यं रूपमुत्सववरयात्रादिषु विष्कम्भकात्मना प्रयुज्यते" इति Wilson's Theatre २. २. १० प्रतिपादितम्।

नाट्यशास्त्रग्रन्थेषु छायानाटकशब्देन नेदं रूपकेषु परिगणितं दृश्यते । श्रीमन्महाभारतव्याख्याता श्रीनीलकण्ठचतुर्धरः (१२।२९५–५) 'रूपोपजीवन'शब्दं व्याख्यन् कथयति—"रूपोपजीवनं जलमण्डपिकेति दाक्षिणात्येषु प्रसिद्धम्, तत्र सूक्ष्मवस्त्रं व्यवधाय चर्ममयैराकारै राजामात्यादीनां चर्या प्रदर्श्यते"। इति।

नाट्यशास्त्रे ४ र्थाध्याये २६८ श्लोकव्याख्याने श्रीमदाचार्याभिनवगुप्तश्रीचरणैरुच्यते–"यतो हेतोरर्थानां काव्यार्थानां प्राप्त्यर्थं साक्षात्कारबुद्ध्या स्वीकारार्थं तज्ज्ञैः प्रयोक्तृभिराङ्गिकाद्यभिनयः कृतस्तत्र तस्मादेतन्नृत्तं कृतं नृत्तशब्देन व्यपदिष्टम्। न तु नाट्यशब्देनैवेत्यर्थः। भवतु वा भिन्नं, तथापि कं स्व-

भावं लक्षणं च स्वात्मन्यङ्गीकरोति। लौकिकत्वं लोकोत्तरत्वं वा। लौकिकत्वे घटादिवस्तुतुल्यत्वं तदनुकारत्वं प्रतिबिम्बादिरूपता वा। तत्रापि नाट्यच्छायात्मकतैव। नाट्यस्यैव ह्यमी भागनिष्पन्दाश्चित्रपुत्रिकापुस्तप्रभृतयो ग्रन्थिकरिकल्पितं (?) साक्षात्कारकल्पप्रत्ययसम्पदा कथापर्यन्तम्। तथा लोकोत्तरत्वे तु नाट्यस्यैवावान्तरभेदमात्रं तत्।" इति।

एतावता नाटकच्छायात्मकं छायानाटकमिति सिद्ध्यति।

प्रायश्छायानाटकमेकाङ्कात्मकमेव बाहुल्येनोपलभ्यते। क्वचित् क्वचिदङ्कद्वयात्मकमपि समुपलभ्यते। भाषायां 'कठपुतली का खेल' इति प्रसिद्धं क्रीडनकमपि छायानाटकमेव। वर्तमानसमये सिनेमाचलच्चित्रपटेषु टाकीति प्रसिद्धं छायानाटकेष्वेवान्तर्भवति।

(उपलब्धानि छायानाटकानि)—संस्कृतसाहित्ये ईदृशानि कतिपयानि छायानाटकानि समुपलभ्यन्ते। तत्र "दूताङ्गदं" नाम च्छायानाटकमेकाङ्कात्मकं बाहुल्येनोपलभ्यते। 'पाण्डवाभ्युदयं' नाम व्यासरामदेवकविप्रणीतमङ्कद्वयात्मकमेकं छायानाटकमुपलभ्यते। प्रकृतं 'सुभद्रापरिणयन'मपि छायानाटकमेव।

(सुभद्रापरिणयनं सुभद्रापरिणयं वा)—प्रकृतं छायानाटकं 'सुभद्रापरिणयनं' इति नाम्ना प्रसिद्धम्। सुभद्रापरिण-

यनाटकानि विभिन्नकविप्रणीतानि पञ्च सन्तीति एम्. कृष्णमाचार्यमहोदयै-र्विरचिते History of classical Sanskrit Litteratureनामक-ग्रन्थे तैरुच्यते ।

तथाहि—

नं० ५२९ सुभद्रापरिणयम् By वेङ्कटाध्वरी ( लक्ष्मीसहस्र, विश्वगुणादर्शचम्वादिनिर्माता ) अस्याङ्कद्वयमात्रमुपलभ्यते ।

नं० ६६८ सुभद्रापरिणयम् By हस्तिमल्लः ( नवमशतकीयः )
नं० ७७१ ,, By नल्लाकविः or भूमिनाथः (पञ्चदशशतकीयः)
,, ,, ,, By रघुनाथाचार्यः
,, ,, सुभद्रापरिणयनम् By व्यासरामदेवः ( चतुर्दशशतकीयः )

इदं मुद्रयितुमुपक्रान्तं सुभद्रापरिणयनं नाम व्यासश्रीरामदेवकविप्रणीतमेकाङ्कात्मकं छायानाटकमस्ति ।

एतन्निर्मातुः कवेर्व्यासश्रीरामदेवस्यैतिह्यमित्थमुपलभ्यते—

(व्यासश्रीरामदेवः)—श्रीमान् व्यासरामदेवकविः त्रयाणां छायानाटकानां कर्तेति ज्ञायते । तानि 'रामाभ्युदय, पाण्डवाभ्युदय, सुभद्रापरिणयनानि' ।

अयं कविः रायपुराधीशानां ( रत्नपुराधीशानां वा ) कलचूरिभूपालानामाश्रित आसीत् ।

'सुभद्रापरिणयनं' छायानाटकमनेन हरिवर्म(१)देवनृपतेर्हरिभ्रमनृपतेर्वा निदेशेन प्रणीतम्। इयमेवास्य प्राथमिकी रचनेति प्रतिभाति। यतः एतद्विरचिते रामाभ्युदय पाण्डवाभ्युदयाख्ये छायानाटके अनेन स्वाश्रयदातुर्हरिवर्मदेवनृपतेः पौत्रस्य श्रीरणमल्लदेवनृपतेराश्रये निवसता विरचिते इति सम्भाव्यते। तत्र पाण्डवाभ्युदयं तु तेन रणमल्लदेवनृपतेराश्रये निवसतैव विरिचितमिति तु निःसन्देहम्।

इण्डियाऑफिस पुस्तकालयसूचीपत्रे नम्बर २३५३ संख्यके पाण्डवाभ्युदयच्छायानाटके उपोद्धाते स्पष्टमेवेदमभिहितम्(२) इण्डियाऑफिस-

---

(१) एकेयं रसना मनस्तनुतरं नापि स्थिरं तत्कथं
वर्ण्यः श्री हरिवर्मदेवनृपतिर्यस्य क्षमामण्डले।
शश्वद्दानजलाभिषेचनबलादम्लानलक्ष्म्याः कला—
वप्यस्मिन्निगमावनीरुहवनी शाखाशतैर्जृम्भते ॥ ६ पृ० ३

किं च, एकाङ्घ्रिकः कलिकदर्थनयाऽनया यं
धर्मः कथं कथमिव स्थितिमेति लोके।
श्रीमान् हरिभ्रमनृपः स्वकरावलम्बं
नित्यं मुदा यदि ददाति न दानवीरः ॥ ७ पृ० ४

तेन च सकलसामन्तमौलिमालामेलनदुर्ललितपादारविन्देन स्वामिना सप्रसादमिदमादिष्टोऽस्मि, यत्किल सरसकविना व्यासश्रीरामदेवेन विरचितमभिनवं सुभद्रापरिणयनं नाम च्छायानाटकम्—

(२)अहमपि तदनु त्रिविधवीरचूडामणे रसमसाहसिकस्य स्वयमङ्कायातविजयश्रीस्वयंवरमालालङ्कृतकण्ठकन्दलस्य भुजबलदलितसकलारातेरारतस्य श्रीह-

पुस्तकालयस्थे पाण्डवाभ्युदयपुस्तके संवत् १५२७
वर्षोल्लेखो वर्त्तते, तेन ततः प्राग्भावित्वं प्रकृतग्रन्थ-
कर्तुरवश्यमेवाभ्युपेयम्।

(अस्य समयः)—एम्-कृष्णमाचारियर एम्. ए. एम्. एल्. पी एच्.
डी महोदयः स्वकीये "हिस्ट्री आव् क्लासिकलसंस्कृतलिट-
रेचर" नामके ग्रन्थे व्यासरामदेवमुद्दिश्येत्थं कथयति—

---

रिभ्रमतनुजजन्मनो महामण्डलेश्वरस्य श्रीमतो **रणमल्लस्य** महानवम्युत्स-
वमनुमिलितसमस्तसामन्तचक्रेऽनुकृतशक्रसंसदि····

सूत्र० (सरसं) अयि! एतदर्थमेवाकारितासि। किं च, विदितमेव तावद्भवत्या,

अस्ति स्वस्त्ययनैकहेतुरखिलक्ष्मावर्मसत्कर्मण—
माविर्भावितभावितत्कृतयुगाचारप्रचारः क्षितौ।
वीरश्रीरणमल्लदेव नृपतिस्तत्तद्गुणै रागिणी
यत्र श्रीश्च सरस्वती च वसतस्त्यक्त्वा निजं मत्सरम्॥

अपि च, न जिह्वासाहस्रं न खलु विपुलत्वं च मनसो
न चायुःसातत्ये कति च न विधातुः प्रतिभुवः।
गुणानामास्थानं निधिरनवधिः शौर्यमहसः
कथं वा वर्ण्यः स्याद्भणत **रणमल्लः** क्षितिपतिः।

आर्ये निरूपयामि तावत्किमपि रूपकमनुरूपम्। (इति चिन्तामभिनीय सहर्षोल्लासं) अस्ति किल सकल-सामन्तचक्रचूडामणिना कवन्धजकुलावतं-सेनामुनैव नरपतिनाऽभ्यर्थितस्य सरसकवेर्व्यासश्रीरामदेवस्य निर्मितिरभिनवं पाण्डवाभ्युदयं नाम च्छायानाटकम्। तदभिनयेन इमं नृपतिमाराधयिष्यामः।

महार्घ्या नटकर्ममर्मनिपुणाः सभ्या गुणग्राहिणो
वाणी रामकवेरवेक्षितरसौचित्या चमत्कारिणी।
पाण्डूनां चरितं च सिञ्चति सुधाधाराभिरन्तः सतां
स्वामी श्रीरणमल्ल एष निखिलक्ष्मापालचूडामणिः॥

पृ० ६८६ नं०७७२ Vyasa Rama Deva "व्यासरामदेव-स्त्रयाणां रामाभ्युदयपाण्डवाभ्युदयसुभद्रापरिणयनानां छाया-नाटकानां लेखकः । अनेन ई० सन् १४०२-१४१५ वर्षान्तराले रायपुर ( रत्नपुर ) पति कलचूरिवंशीयभूपालानामाश्रये पूर्वोक्तानि नाटकानि रचितानि ।"

एतेनेदमनुमातुं शक्यते यदसौ कविश्चतुर्दशशतके समुत्पन्न इति । हरिवर्मदेवमारभ्य तत्पौत्रपर्यन्तमस्याव-स्थितेः प्रमाणसिद्धत्वादस्य दीर्घजीवित्वमनुमातुं सुशकम् ।

(अस्य जातिः)—'व्यास' इत्युपाधेरयं ब्राह्मण इति निर्विवादम् । पञ्चद्राविड-पञ्चगौडान्तर्गतः कतमो ब्राह्मणोऽयमिति तु प्रमाणाभा-वात् वक्तुं न शक्यते । एतावानेवास्य परिचयो ज्ञायते ।

(ग्रन्थसमालोचनम्)—छायानाटकमिदं लघुतममेकाङ्कमपि रचनाप्रौढिमहिम्ना बाढमाकर्षति मनः सचेतसाम् । तीर्थयात्राप्रसङ्गेन द्वारकां गतस्य धनञ्जयस्य सुभद्रायामनुरागोत्पत्तिः, ततः क्षत्रियोचितं तेन तस्या हठहरणम्, तदनु श्रीकृष्ण-माध्यस्थ्येन बलदेवादियादववृद्धानां सम्मत्या विवाह-श्चेति वृत्तं नाटकोचितया सरण्या मधुरशब्दार्थसन्दर्भेण कविना प्रणीतमस्ति ।

यद्यप्यत्र प्राकृतभाषायां बहुशः स्खलितानि दृश्य-न्ते, नचाऽत्र विषये नाट्यशास्त्रनियमा अपि बहुशः पाल्यन्ते, तथाऽपि रचनासौष्ठवेनार्थगाम्भीर्येण प्रौढ्या च समलङ्कृतं छायानाटकमिदमुपादेयमेवेति युक्तमुत्पश्यामः ।

संस्करणं चेदमत्रत्यराजकीयसरस्वतीभवनपुस्त-कालयस्थमेकमेव पुस्तकमादर्शत्वेन परिकल्प्य कृतम् ।

लेखसमयरहितमपीदं संवत् १४००तः किञ्चिदनन्तरमेव लिखितमिति तत्रत्यजैनलिपिपृष्ठमात्रादिपर्यालोचनेन प्रतीयते । आदर्शपुस्तकस्य चत्वार्येव पत्राणि सन्ति । पुस्तकपरिमाणं च--१३, ३ × ४, ३ वर्त्तते ।

अस्मिन् कार्ये श्रीमत्काशिकराजकीयसंस्कृतमहाविद्यालयप्रधानाध्यक्षाणां प्राच्यप्रतीच्यविद्यानदीष्णानां श्रीमतां डॉ० मङ्गलदेव शास्त्रि एम्. ए. डी. फिल् महोदयानामाज्ञया प्रवृत्तोऽहं तत्प्रदर्शितपथेनैव कार्यमिदं समपूरयमिति तेभ्यः सहस्रशो धन्यवादान् वितरामि । ईदृशप्रत्नग्रन्थरत्नरसिकानां प्रभुवराणां तेषामाधिपत्ये भूयोऽपीदृशग्रन्थसम्पादनसौभाग्यं लभेयेति सम्भावयन् गुणदोषयोर्ग्रहणाग्रहणाय विदुषः साञ्जलिबन्धं सम्प्रार्थ्य विरमामि ।

| | |
|---|---|
| सरस्वतीभवनम्<br>काशी<br>दीपावली<br>२२—१०—३८ | विदुषां वशंवदः<br>नारायणशास्त्री खिस्ते |

## सुभद्रापरिणयने नाटकीयपात्राणि—



**पुरुषाः**

१ सूत्रधारः

२ पुरुषः वसुभूतिः (अर्जुनस्य प्रियवयस्यः)

३ पुष्कराक्षः (श्रीकृष्णानुचरः )

४ अर्जुनः

५ विजयसेनः

६ सुनीतिः (अर्जुनस्य वयस्यौ)

७ सारथिः (अर्जुनस्य)

८ वासुदेवः (भगवान् श्रीकृष्णः)

**स्त्रियः**

१ नटी

२ पत्रलेखा (अर्जुनस्य परिचारिका)

३ सुभद्रा

४ बलकुलमाला

५ लवङ्गिका

६ मालतिका

७ कलहंसिका (सुभद्रायाः सख्यः)






व्यासश्रीरामदेवकविप्रणीतं

# सुभद्रापरिणयनं

नाम

## छायानाटकम्

( मङ्गलम् )

गङ्गासङ्गमशालिनामविरलासङ्गैकशोभाभृतां
पञ्चानामपि मध्यमः समधिकश्रीमान् किरीटी लसन् ।
लावण्यामृतदीर्घिकामिव विधोर्बालां कलामुद्वहन्
विश्वाधीनवधूय धूर्जटिजटाजूटश्रियं पातु वः ॥१॥

अपि च,

त्रिजगति विजयन्ते सन्ततावार्यवीर्या
निरुपममहिमानः पञ्च बाणाः स्मरस्य ।
जयति स पुनरेषां यो वशीकृत्य विश्वं
वितरति न चतुर्भ्यो विक्रमस्यावकाशम् ॥२॥

( नान्द्यन्ते )

सूत्रधारः—( समन्तादवलोक्य सहर्षं ) कथं प्रवृत्त एव वसन्तोत्सवः । यदेताश्चलदविरलबालमृदुलपल्लवावरणशालिन्यः समसमयसमुद्यतातिमञ्जुमञ्जरिरजःपुञ्जपिञ्जरितदशदिशो ऽति-

शोभितभुवनमण्डलाश्चपलमलयमारुतान्दोलनचकितललितशाखालता मधुसमयसमागममहमानयन्त्यो नवकुसुमसमृद्धिवर्द्धितमदा मुदा नृत्यन्त्यश्च विविधवनराजयो विराजन्ते ।

अपि च,

समन्तादुन्मीलद्वकुलमुकुलान्तर्मधुसुधा-
सुपीतिप्रीतानामयमिह मधूचां कलकलः ॥
इतोऽपि श्रूयन्ते परभृतवधूपञ्चमरव-
प्रपञ्चा वैपञ्चध्वनिमधरयन्तो ऽतिमधुराः ॥३॥

( स्पर्शसुखमभिनीय )

अयमयं विमलजलकेलिलालसो विलुलितविकचकमलमुकुलामोदमेदुरवपुराहृतमकरन्दविन्दुसुन्दरो मन्दमन्दमुपनमन्नङ्गसङ्गतः कमपि जनमनःप्रमदमातनोति मलयानिलः ।

( सविमर्शं ) ( किञ्चिद्विहस्य )

अधिमलयतटीपटीरकुञ्जं
घनघनसारलतारतातिसक्तः ।
अहह किमु विमुच्य धाम मन्दो
मधुसमयेऽपि समीरणः प्रतस्थे ॥ ४ ॥

( स्मरणमभिनीय—सानुशयमिव )

कथं विस्मृत एव स्वामिनो निदेशः, तद्भवतु गृहं गत्वा गृहिणीमाकार्य कार्यमिदं सपदि सम्पादयामि ।

( परिक्रम्य—नेपथ्याभिमुखमवलोक्य )

आर्ये ! इतस्तावत् ।

( प्रविश्य )

नटी—एसम्हि, आणवेदु अज्जो, किं कारणं समरणेणा-णुग्गहिदम्हि ।

( एषाऽस्मि, आज्ञापयत्वार्यः, किं कारणम्, स्मरणेनानुगृहीताऽस्मि । )

सूत्रधार—( सादरं ) आर्ये ! विदितमेतद्भवत्याः ।

अस्ति प्रत्यर्थिराजव्रजमुकुटमणीराजिनीराजिताङ्घ्रिः
पारावारान्तपारप्रसृमरसुयशाः श्रीहरिब्रह्मरूपः ।।
भ्रान्त्वा भूमीमशेषां क्वचिदपि सदृशं स्वाश्रयं नाप्नुवाना
सार्द्धं नानाकलाभिः श्रयति भगवती भारती यद्भुजाग्रम्।५।

अपि च,

एकेयं रसना मनस्तनुतरं नापि स्थिरं तत्कथं
वर्ण्यः श्रीहरिवर्मदेवनृपतिर्यस्य क्षमामण्डले ।
शश्वद्दानजलाभिषेचनबलादम्लानलक्ष्म्याः कला-
वप्यस्मिन्निगमावनीरुहवनी शाखाशतैर्जृम्भते।।६।।

किं च,

एकाङ्घ्रिकः कलिकदर्थनया ऽनया ऽयं
धर्मः कथं कथमिव स्थितिमेति लोके ।

श्रीमान् हरिश्चमनृपः स्वकरावलम्बं
नित्यं मुदा यदि ददाति न दानवीरः ॥ ७ ॥

तेन च सकलसामन्तमौलिमालामेलनदुर्ललितपादारविन्देन श्रीमता स्वामिना सप्रसादमिदमादिष्टोऽस्मि, यत्किल सरसकविना व्यासश्रीरामदेवेन विरचितमभिनवं सुभद्रापरिणयनं नाम च्छायानाटकम्, तदिह महति वसन्तोत्सवे भवता ऽभिनीयमानं निरूपयितुमिच्छामः ।

नटीः—( सविस्मयं ) अच्चरिअं अच्चरिअं । कहं विअ अणवरअरणरसवसीकयमणोविणोयणिग्गमियसयलकालस्स पबलभुअबलबलामोडिमोडिअमण्डलिअमुट्ठिममरट्ठस्स एअस्स तिविहवीरचूडामणिणो महीमहिन्दस्स हिययम्मि नट्टकलादंसणकोऊहलं पडिहादि । ( आश्चर्यमाश्चर्यम् । कथमिवानवरतरणरसवशीकृतमनोविनोदानिर्गमितसकलकालस्य प्रबलभुजबलबलाकर्षाकृष्टमण्डलित....महाराष्ट्रस्य एतस्य त्रिविधवीरचूडामणेर्महीमहेन्द्रस्य हृदये नाट्यकलादर्शनकौतूहलं प्रतिभाति । )

सूत्रधारः—( सगर्वं ) आर्ये ! नूनमनभिज्ञासि महासत्त्वचरितानाम् । प्रकृत्यैव दुरवगाहगम्भीरमहिममहनीया महान्तः । तदिह जलनिधिमेव तावदाकलयतु भवती ।

अस्मिन्नौर्वोऽपि लीनः क्वचिदपि गिरयः शेरते शक्रभीताः
क्वापि स्वापाय नित्यं निवसति स हरिः कुत्रचिद्दलसम्पत्॥

रागादागामिनीनां क्वचन च सरितां सङ्गमे रङ्गकेलिः
काले काले कलावत्युपनमति न वा कापि कल्लोललीला ॥८॥

नटीः—एवं णेदं । किं पुण अण्णं पि पडिहादि । एसा सहजमुद्धिममहुरभावमंजुला वि अम्हार....कलायणं बहुविहविअड्ढविज्जापहरिअहिअयं पुहविबिहप्पइं कहं रञ्जयिस्सदि ।
( एवं न्विदम् । किं पुनरन्यदपि प्रतिभाति । एषा सहज....मधुरभावमञ्जुलाऽपि अस्माकं कलाचणं बहुविधविदग्धविद्यापहृतहृदयं पृथिवीबृहस्पतिं कथं रञ्जयिष्यति । )

सूत्रधारः—( सगर्वम ) कथं रञ्जयिष्यतीति किमुच्यते ? पश्य,

ललितसकलाङ्गसन्धिः
सुरीतिरसभावसहजमधुरेयम् ।
नयनविषयं प्रयाता
वशयति कं नाम भारती न कला ॥ ९ ॥

किं च,

जगदुपरि परिवर्त्तितानामीदृशानां तेजस्विनामगणितगुणगरिमसारभावा भवति सदानुवृत्तिवर्तिषु प्रसादबुद्धिः ।

तथा हि—

जडानुषङ्गाच्छिदुरा गुणानां
सम्पत्स्वभावात्कमलाकरस्य ।

तथापि भानुः सततानुवृत्ति-
परं सलक्ष्मीकमिमं करोति ॥ १० ॥

नटी:—( सोल्लासं ) अज्जताकमलजकुलमलंकरेइ हरि-
ब्भमनरिन्दो। ( आर्यताकमलजकुलमलङ्करोति हरिभ्रमनरेन्द्रः । )

सूत्रधारः—( साहङ्कारं ) आर्ये ! स्वकुलविभूषणमात्रे, का नाम वर्णना। यदेष जगदशेषमपि विभूषयति भूपतिः ।

यतः,

कर्पूरैरिव पूरितं विमलितं गङ्गातरङ्गैरिव
श्रीखण्डैरिव भूषितं शिशिरितं ज्योत्स्नावितानैरिव ।
हारौघैरिव भूषितं कवचितं जातीप्रसूनैरिव
श्रीमद्भाति हरिभ्रमाद्यितिपतेः शुभ्रैर्यशोभिर्जगत ॥११॥

अपि च,

तत्तादृक्कथमेकया रसनया दानाद्भुतं वर्ण्यतां
स्वर्गोत्तीर्णसुरद्रुमभ्रमकरं राष्ट्रौढचूडामणेः ॥
स्वर्णालङ्कृतिशृङ्खलावितरणव्याजेन येनानिशं
भूपालेन कलावतां निगडिता हस्ता वदान्यान्तरात्॥१२॥

( विचिन्त्य सोल्लासं )

सर्वथा फलितमस्माकं मनोरथेन । यदियं परिषदाराधन-
सामग्री ।




तथा हि—

महार्घ्याः सविशेषनैपुणजुषः सेयं विदग्धा सभा
चेतःसंवननं जनेषु ललितं पार्थस्य लीलायितम् ।
सर्वाङ्गीणरसाभिरामिकगुणग्रामश्च रामः कविः
स्वामी चैष हरिभ्रमः क्रमजुषां दारिद्र्यमुद्राहरः ॥ १३ ॥

( नेपथ्ये )

उल्लासिदहाससिरिणा
सरसीकमलाअरेण मिलिअस्स ।
मलयाणिलस्स महिमा
विलसइ भुअणंमि कोवि रमणीओ ॥१४॥

( उल्लसितहासश्रिया सरसीकमलाकरेण मिलितस्य ।
मलयानिलस्य महिमा विलसति भुवने कोऽपि रमणीयः ॥ )

सूत्रधारः—( श्रुत्वा, सहर्षं नेपथ्याभिमुखमवलोक्य )

आर्ये ! कथमुपक्रान्तमेव नर्तकैः । यदियं द्वारवतीनिवासिना भगवता श्रीवासुदेवेन सङ्गतस्य किमपि महिमभाजोऽर्जुनस्य प्रावेशिकी ध्रुवा श्रूयते । तदावामप्यनन्तरकरणीयाय सज्जीभवावः ।

इति निष्क्रान्तौ । प्रस्तावना ।

( ततः प्रविशति बिसकिसलयादिशिशिरोपचारहस्तः पुरुषः । )

पुरुषः—(ऊर्ध्वमवलोक्य ससंभ्रमं) कथं विभाति विभावरी ।

तारा नातिघना मुखेषु ककुभां किञ्चित्तमश्शीयते
रूप्यादर्शतलाविलद्युतिरितश्चन्द्रोऽपि तन्द्रायितः ।
किञ्चान्तस्तरुकोटरेषु विगलन्निद्रारसाः सालसं
स्थायं स्थायममी समीरितगिरः कूजन्ति पक्षिव्रजाः ॥१५॥

अपि च,

निस्तन्द्रचन्द्रकरकन्दलतुन्दिलानि
लीलाचकोरयुगलान्यलसीभवन्ति ॥
पीत्वा मधूनि च वधूरतखेदमुद्रा-
निद्रालवः कुवलयान्यलयो विशन्ति ॥ १६ ॥

अये कथमयमुदयगिरिशिखरशेखरीभवति भगवान् गभस्तिमाली । ( समन्ततो विभाव्य सविस्मयं ) अहो अरुणसारथेररुणिमा कश्चिदतरुणकिरणानाम् ।

सिन्दूरैरिव दिग्भ्रमैरिव जपापुष्पैरिव प्रस्फुर-
न्माणिक्यैरिव कुङ्कुमैरिव लसल्लाक्षारसौघैरिव ॥
एतद्विच्छुरितं कृतं कवचितं व्याभूषितं रूषितं
सिक्तं भाति जगद्विसृत्वरतरैर्भानोर्नवैर्भानुभिः ॥१७॥

( पुरोऽवलोक्य )

अहो प्रतिदिनमवलोक्यमानाऽपि नवनवैव दिशति कमपि

प्रमदभरं पुरन्दरानुजभुजपरिघपरिपालितेयं पुरी द्वारवती ।

मध्ये विचित्रमणिचित्रितहेमहर्म्य-
रथ्या विभाति नगरी गरुडध्वजस्य ।
यत्रेन्द्रनीलरुचिरो हरिरेष भूमेः
शृङ्गारहारपदनायकवच्चकास्ति ॥ १८ ॥

( परिक्रम्य, पुरोऽवलोक्य )

कथमयं भगवतो मधुसूदनस्यानुचरः पुष्कराक्ष इत एवाभिवर्तते । ( सवितर्कं ) हन्त कुमारधनञ्जयो ऽद्य निखिलामपि निशाम्,

बिभ्यद्ददाति न दृशं यदतन्द्रचन्द्रे
निद्रां न विन्दति न निन्दति चन्दनेऽपि ।
सम्भावयामि तदसंशयमेतदीये
जागर्ति कापि दयिता हृदयेऽन्तरस्य ॥ १९ ॥

( इति किञ्चिच्चिन्तां नाटयति )

( ततः प्रविशति पुष्कराक्षः )

पुष्कराक्षः—अहो स्वामिनो मधुसूदनस्य धनञ्जये किमपि निरतिशयं प्रेम ।

स्वैरं विहृत्य नवकेलिवनान्निवृत्त-
मात्रस्य सख्युरुदितामरतिं निशम्य ।

तत्तद्वितर्कशतसम्भृतमानसोऽद्य
देवः कथं कथमहो रजनीमनैषीत् ॥ २० ॥

आदिष्टं च मम यद्वत्स पुष्कराक्ष ! प्रत्यूषएव वृत्तान्तमिमम· वगम्य त्वरिततरं मां द्रक्ष्यसीति । तद्यावदनुसरामि ।

( कचिदपि तदरतिनिमित्तं परिक्रम्यावलोक्य ) कथमयं धन· ञ्जयस्य प्रियवयस्यो वसुभूतिः ? ।

( उपसृत्य )

वयस्य ! वसुभूते ! विभावयामि किमपि चिन्तातुरं ते चेतः । यदिह सविधस्थितमपि मां न सम्भावयसि ।

वसुभूतिः—( सहसा ऽवलोक्य सादरं ) सखे ! पुष्क· राक्ष ! परिष्वजस्व ( इत्युभावालिङ्गनं नाटयतः )

पुष्कराक्षः—अयि वसुभूते ! भ्रातरेव बिसकिसलयादि शिशिरोपचारसम्भारश्चिन्ता चेयं किमपि निमित्तमासूचयतः । तत्कथय किमेतत् ?

वसुभूतिः—सखे ! किमकथनीयं नाम भवतः । शृणु तावत् । एकदा श्रुतन्न कुरुराजधान्यामेव गगनमध्यमध्यारूढे भगवति मरीचिमालिनि राजकुलद्वारि कैश्चिदपहृतगोधनस्य गो- पजनस्य परिभवघोषणायां सहसैव महान् कलकलः समभवत् ।

पुष्कराक्षः—ततस्ततः ।

वसुभूतिः—ततश्च तदाकर्ण्य रिपुपरिभवमसहमानः सम-

यमतिलङ्घ्य गाण्डीवग्रहाय रहसि पाञ्चालीसहचरस्य महाराजस्य सरभसं विवेश वासभवनं धनञ्जयः।

पुष्कराक्षः—( सबहुमानं ) किमुच्यते धनञ्जयस्य रणरसलीलायितम् । ततस्ततः ?

वसुभूतिः—ततश्च तत्कालमेव तानाततायिनो निहत्य, आहृत्य च गोधनानि समयविधिमनुसन्दधानस्तीर्थयात्राप्रसक्तः सरस्वतीसङ्गमसमुल्लासिनो महोदधे रोधसि विहितायतनसन्निधानेन भगवता श्रीसोमनाथदेवेन सनाथं प्रभासमाससाद ।

पुष्कराक्षः—किमाश्चर्यं धनञ्जये विक्रमस्य समुचितक्रमस्य च । ततस्ततः ? ।

वसुभूतिः—ततश्च समधिगतवृत्तान्तेन भगवता श्रीवासुदेवेन त्वरिततरमागतेन सङ्गतः कमपि वाङ्मनसातिवर्तिनं प्रमदभरमनुभवन् सहैव द्वारवतीमुपेत्य लीलोद्यानसविधवर्तिनि विजितवैजयन्ते विलासभवने कृतनिवासो दिवानिशं नवनवोपचारलालितः कलितसुखसन्ततिर्नयति दिवसानि ।

पुष्कराक्षः—ततस्ततः ।

वसुभूतिः—एवं च सति ह्यस्तनदिनएव वनविहारकौतुकी करकलितकनकवेत्रलतया पत्रलेखया ऽनुगम्यमानो मधुकरमालयेव वसन्तस्तद्विलासकाननमलञ्चकार ।

पुष्कराक्षः—ततस्ततः ।

वसुभूतिः—सखे ! न परिकलयामि लीलावनवृत्तान्तम्। परं प्रत्यागतमात्र एव मनसि कामपि महतीमरतिमुद्वहन्नन्यइव, अपरिचित इव, शून्य इव, मत्त इव, मुषित इव, मूढ इव, भ्रान्त-इव, ग्रहग्रस्त इव, काञ्चिदननुभूतचरीमवस्थामापन्नः सहसैव समदृश्यत कुमारो धनञ्जयः ।

पुष्कराक्षः–(साशङ्कं) अहह महदसम्भावनीयमेतत् । ततस्ततः ।

वसुभूतिः–ततश्च कथं कथमपि गमितवासरः सुसंवृति-रपि सदसि स्थातुमनलमवलम्ब्य पत्रलेखाकरमधिरुरोह परि-मितपरिवारः प्रासादशिखरम् ।

पुष्कराक्षः–ततस्ततः ।

वसुभूतिः—ततश्च कतिपयकालकलया निजकरसुधा-भिधवलयति धरातलं तरुणरोहिणीरमणे,

तान्तस्य तापविपदं किमिव ब्रवीमि
चन्द्रः कथं क्वचिदहो दहनेऽपि दृष्टः।
आस्तां तदेतदबिभ्रदिमामवस्थां
यैरीक्षितः स खलु हन्त त एव धीराः ॥ २१ ॥

(इत्युत्कम्पं नाटयति)

पुष्कराक्षः—अहह श्रोतुमपि न शक्नोमि ।

वसुभूतिः—सखे ! कामपि तरलतामाबिभ्रतः कुमारस्य,

क्षणं तल्पे ऽनल्पैः किसलयदलैः कल्पिततले
क्षणं लीलावाप्यां क्षणमथ च वातायनमनु ।
क्षणं धारागारे क्षणमुपरि वेदिस्थितिरभूत्
परं यातायातैरजनि रजनीयं परिणता ॥ २२ ॥

पुष्कराक्षः—वयस्य ! वसुभूते ! तर्कयसि किमपि तत्तापनिमित्तम् ?

वसुभूतिः—सखे ! विचारयामि निजधियोऽनुरूपम् ।

( "निश्वयद्ददाती"त्यादि पठति )

पुष्कराक्षः—एवमेतत् । साधुसन्दर्शिनी वयस्यबुद्धिः । तत्त्वरस्व शिशिरोपचारसन्निधानाय । अहमपि वृत्तान्तमिमं स्वामिने निवेदयामि ।

( इति निष्क्रान्तौ )

विष्कम्भकः ।

( ततः प्रविशति मदनावस्थां नाटयन् यथानिर्दिष्टो ऽर्जुनः )

विभवतश्च परिवारः ।

अर्जुनः—( सवितर्कमात्मगतं ) हन्त विषमोऽयं विधिव्यतिकरः ।

लीलोद्याने दिदृक्षा क नु भवतु मम काऽस्तु साऽपीह तन्वी
चेष्टा माधुर्यधुर्याः क नु हृदयहृतः सन्तु तास्तास्तदीयाः ।

काऽधैर्यं चेतसोऽस्तु क नु किरतु शरानेष,कामः प्रकामं
नो जाने सन्निधानं स्फुरतु नवमिदं किं विधातुं विधातुः२३

( इति मदनावस्थामभिनीय पुनः संवरणं नाटयति )

विजयसेनः—( सोपरोधं ) अयि कुमार धनञ्जय ! कथय किमिदमवगूहनं परिजनेऽपि ! यतः,

दहन्नन्तस्तरवं प्रसरति सदा संवृतिकृता-
मनुद्भिन्नो धैर्याद्बहिरिह गभीरे मनसि यः ।
स चिन्तासन्तानः सततमविषह्यः प्रतिपदं
प्रसह्य प्रोन्माथी हृदयपुटपाकः स्फुटतरः ॥ २४ ॥

सुनीतिः—स्वामिन् ! साधु विज्ञापयति विजयसेनः ।

इच्छानुवर्त्ति सततमविभक्तसुखासुखम् ।
स्थानमेकं रहस्यस्य मनः परिजनोऽथ वा ॥ २५ ॥

तदलं दोलायितेन । ( अर्जुनः सनिभृतनिःश्वासं किञ्चिदधोमुखस्तिष्ठति ) ।

विजयसेनः—( साश्चर्यं ) स्वामिन् ! सकलरहस्येषु,

चेतो वयं वयं चेतो गणनेयमभूत्पुरा ।
कथमद्यतनी वृत्तिश्चेतश्चेतो वयं वयम् ॥ २६ ॥

अर्जुनः—( सविलक्षस्मितं ) अयि वयस्यौ ! युवयोरपि किमपि गोपनीयमस्ति ? परमियं त्रपा किञ्चिदन्तरयति ।

( इति पुनर्वैलक्ष्यं नाटयति )

सुनीतिः—

क्वचनानुचितविधाने
निजमनसोऽपि त्रपा सतां भवति ।
स्निग्धः सदानुवृत्ति-
र्न परिजनः कुत्रचित् त्रपाहेतुः ॥ २७ ॥

अर्जुनः—( सविलक्षस्मितं ) शृणुतं तावत् । प्रभातप्राय एव परेद्यवि विहिताह्वानसंज्ञ इवाऽनिलविलुलितलतापल्लवाङ्गुलिभिस्तरुभिरुच्चैराहूयमान इव मदकलकोकिलाकुलकुहूरवैरभिनन्द्यमानइव मधुरसरसनमत्तमधुकरमधुरझङ्कारैरनुनीयमान इव प्रतिपदमुपनम्य नवकुसुमसौरभोद्गारिणोपवनपवनेन दिदृक्षारसपरवशः पत्रलेखया सह तदुद्यानमविशम् ।

उभौ—ततस्ततः ।

अर्जुनः—ततश्च,

आलोक्य लोकोत्तररूपसम्प-
ल्लीलावनं संवननं दृशस्तत् ।
चित्रं न तच्चित्ररथं कथञ्चि-
न्नानन्दनं नन्दनमप्यवैमि ॥ २८ ॥

तत्र चित्रपरम्परापहृतमना मनागिव परिभ्रमन् कुसुमावचायपरिचयेन किमपि कलयन्नायासलवं लवङ्गलतामण्डपतले विमलमणिवेदिकायामुपविश्य श्रममनैषम् ।

उभौ—ततस्ततः।

अर्जुनः—तत्र च परिसर एव तरुलतान्तरितं त्वरितगामिन्याः कस्याश्चन कामिन्या नूपुररवकिर्मीरितं 'दिष्ट्या सखि! स एवायमिह' इति मन्दं मन्दं शब्दमश्रौषम्।

विजयसेनः—( सवितर्कं ) नूनं कदाचन दर्शनजनितानुरागया कया च न पुनरिदानीं वनविहारवीक्षितं देवमवधारयितुं प्रहिताया निभृतमागम्य सम्यगवगम्य निवृत्तायाः प्रियावेदनेन भवितव्यम्।

अर्जुनः—ततश्च किमिदमिति कौतुकेनास्थाय त्रिचतुरैरेव पदैः,

रूपेण वाङ्मनसयोरतिवृत्तपारां
तारान्तरे शशिकलामिव विस्फुरन्तीम्।
कां चित्सखीषु सविशेषविसारिलक्ष्मी-
मुद्वीक्ष्य विस्मयरसाम्बुनिधावमज्जम्॥ २९॥

ततश्च क्षणमवलोक्य तामिदमचिन्तयम्।

किं निर्मितेयं घनसाररम्भा-
स्तम्भाद्विधायार्द्धभिदां स्वयम्भूः।
राकामृगाङ्कादथ दृश्यमान-
द्विधाविधादत्तकलङ्कशङ्कात्॥ ३०॥

विजयसेनः—ततश्च।

अर्जुनः—ततश्च त्रिभुवनविजयिनो मदनस्य मूर्तिमती शक्तिरिव केयमिति मयि विचिन्तयत्येव सा,

सस्वेदबिन्दुनिकुरम्बकरम्बिताङ्ग-
भङ्गं कुरङ्गदृगनङ्गरसालसानि ।
मद्वीक्षया वलितकन्धरबन्धुराणि
शून्यानि कानि च न मन्दमदात्पदानि ॥ ३१ ॥

विजयसेनः—अयि कुमार! कतमामलङ्करोति सा वयोऽवस्थाम्?

अर्जुनः—मन्ये अभिनवयौवनारम्भमेतदीयं वयः। यदस्याः,

दृशोर्द्वन्द्वं मुक्त्वा चिरपरिचितां ताम्रजुगतिं
चलति किञ्चिद्वाचि प्रसरति तथा नातितरलम् ।
कुचश्रीरप्युच्चैः श्रयति न निजाभोगमुचितं
नितम्बः सल्लक्ष्मीरपि च गरिमाणं गुणयति॥३२॥

सुनीतिः—हन्त मन्मथप्रथमावतरणमङ्गलशंसिनीयमवस्था तदङ्गानाम् ।

अर्जुनः—तदनु वनविहारलीलया कतिपयपदानि दत्वा जनितश्रमेव बकुलतरुतले कृतस्थितिः सा सुन्दराङ्गी,

सन्दंशिताङ्गुलिनिपीडितपाणिपृष्ठ-
मुल्लासिबाहुयुगुलं परिवर्त्य किञ्चित् ।

उत्तम्भितोच्चकुचकुम्भकृताङ्गभङ्गा
मद्दृक्पथे सुखविधेः परिधिं चकार ॥ ३३ ॥

अपि च,

वितन्वती तानि तरङ्गितानि
तदीयदृग्दर्शितभूरिभावा ।
अपाङ्गरङ्गे कृतलास्यभङ्गी-
रङ्गीकृतानङ्गगुरूपदेशा ॥ ३४ ॥

सुनीतिः—( सवितर्कं )

दिष्ट्या स एव हि सखीति सखीवचो यत्
यच्चाप्यनङ्गकलितानि च तानि तस्याः ।
सम्भावयामि तदसंशयमेतदीयं
चेतश्चिरं कलितरागभरं त्वयीति ॥ ३५ ॥

अर्जुनः—अत्रान्तरे जराविसंष्ठुलगतिरागत्य दूरत एव कोऽपि कञ्चुकी—'भर्तृदारिके ! देव्यो भवतीं दिदृक्षन्ते' इति किञ्चिदुच्चैरवोचत् ।

सुनीतिः—ततस्ततः ।

अर्जुनः—ततश्च तद्वचनसमनन्तरमेव कथं कथञ्चिदनिच्छन्त्यपि बलादिव नीयमाना पदे पदे प्रस्खलन्ती मिषेण पुनः पुनर्मयि कटाक्षमुत्क्षिपन्ती समं सखीभिर्मम मनसा च तरुलतान्तरिततनुः प्रतस्थे ।

विजयसेनः—ततस्ततः ।

अर्जुनः—ततश्च नयनपथमतिक्रान्तायां च तस्यां किमिय-मपस्मृतिर्निद्रा वा, किं स्वप्न उत मोहः, किं सुखमसुखं वा, कोऽहं क्व वा, किमिदमिति किञ्चन नाध्यगच्छम् । स्मरशरनिकर-कीलितइव विकलेन्द्रियवृत्तिः क्षणमतिष्ठम् ।

सुनीतिः—( साशङ्कं ) ततस्ततः ।

अर्जुनः—ततश्च पत्रलेखाप्रयत्नेन लब्धप्रबोधः क्षणमिव स्थित्वा तत्करमवलम्ब्य श्रमजलगलितचरणलाक्षारुणां तत्पदप-रम्परामधिगम्यानुमिततद्गतिस्तामनुसरन्नदूरतएव तरुणतमालल-तान्तरितः पुरत एव यावत्तां पश्यामि तावच्च,

स्वद्वारि वेदिकदलीं परिरभ्य दोर्भ्यां
प्रत्यग्निवेश्यनतमाननमंसदेशे ।
आमीलिताक्षनिभृतश्वसितं विवृत्त-
पादाम्बुजा किमपि सा ऽतिचिरं निदध्यौ ॥३६॥

सुनीतिः—( सोच्छ्वासं ) ततस्ततः ।

अर्जुनः—ततश्च पुनरुज्जीवित इव,

सद्यः प्रोद्यदनङ्गरङ्गकलितां तां वीक्ष्य तादृग्विधां
स्वर्गादप्युपरीव तावदभवं मग्नः सुधायामिव ।
यावच्चाहितविस्मयेन मनसा तां भावयामि क्षणं

( किञ्चिन्निमीलितनयनः क्षणमिव स्थित्वा )

तावच्च,

नो जाने सहसैव सा किमविशद् गेहं नु देहं मम ॥१७॥

( इति पुनश्चिन्तां नाटयति )

विजयसेनः—( सुनीतिं प्रति जनान्तिकं ) विषममिव कि-मपि पश्यामि । ( अर्जुनं प्रति ) स्वामिन्! ततस्ततः ।

अर्जुनः—( सनिःश्वासं ) तदनु मदनहतकेन कामपि दशां लम्भितः । पत्रलेखया कथं कथञ्चन सदनमानीतोऽस्मि ।

सुनीतिः—देव विज्ञायते देवस्य सकलकरणहरिणवा-गुरा कतमेयमिति ?

अर्जुनः—वयस्य ! तदेव विज्ञातुं प्रातरेव प्रहिता न जाने कथं नु चिरयति पत्रलेखा ?

( इत्यौत्सुक्यं नाटयति )

( ततः प्रविशति पत्रलेखा )

पत्रलेखा—( पुरो विलोक्य ) हद्धी हद्धी कहं पुणो देवस्स अज्जु वि सच्चिअ हिअगंठी । ( कथं पुनर्देवस्य अद्यपि सत्येव हृदयग्रन्थिः ) ?

( परिक्रम्य ) जयदु देवो । ( जयतु देवः । )

अर्जुनः—( दृष्ट्वा ) अयि पत्रलेखे ! कथय किमपि विदि-तवत्यसि ?

पत्रलेखा—देव ! देवादेसेण इदो णिग्गदाएव्व मए

महुमहणपहुदीण अन्तेउरएसु मिसेण परिब्भमिअ णिउणं णि-रूवयंतीएवि कहिं पि किं पि ण परिकालिदं। ( देव ! देवादेशेन इतो निर्गतयैव मया मधुमथनप्रभृतीनामन्तःपुरेषु मिषेण परिभ्रम्य निपुणं निरूपयन्त्याऽपि कुत्रापि किमपि न परिकलितम् )

अर्जुनः—( सविषादौत्सुक्यं ) ततस्ततः।

पत्रलेखा—तदो अ दाणिं व्विअ देवी रोहिणीए मन्दि-रादो णिक्कन्तमित्ताए तस्सिं विअ दुवारदेसे भट्टिदारिआ सुभद्दाए उवजणणी खीरतरंगिणी किं पि चिन्ताउलहियया लक्खिदा पुच्छिदा अ चिन्ताकारणं। ( ततश्चेदानीमिव देव्यां रोहिण्यां मन्दिरान्निष्क्रान्तमात्रायां तस्मिन्नेव द्वारदेशे भर्तृदारिका-सुभद्राया उपजननी क्षीरतरङ्गिणी किमपि चिन्ताकुलहृदया ऽऽलक्षिता पृष्टा च चिन्ताकारणम् )

अर्जुनः—( सवितर्कं ) ततस्ततः।

पत्रलेखा—तदो अ भणिदं तीए, सहि पत्तलेहे अम्हाण भट्टिदारिआ कदिवयदिवसाणं पहुदि दुम्मणायमाणा,

एदस्सिं वि महूस्सवे ण कुणइ हिंदोलणाखेलणं<br>
सद्धं मुद्धसहीहि कीलइ मणं पंचालियाहिं ण य।<br>
किं अण्णं सुअसारिआण महुरालावे वि उव्विबाविरी<br>
चित्ते आलिहियव्व सुन्नहिअया रत्तिंदिअं दीसई॥३८॥

( ततश्च भणितं तया सखि पत्रलेखे! अस्माकं भर्तृदारिका कतिपयदिवसेभ्यः प्रभृति दुर्मनायमाना, )

एतस्मिन्नपि मधूत्सवे न कुरुते हिन्दोलनाखेलनं
सार्द्धं मुग्धसखीभिःक्रीडति मनाक् पाञ्चालिकाभिर्न च ।
किमन्यच्छुकसारिकाणां मधुरालापेऽपि उद्भ्राम्यती !
चित्रे आलिखितेव शून्यहृदया रात्रिन्दिवं दृश्यते॥३८॥

अर्जुनः—( सोत्कण्ठं श्रुत्वा ) ततस्ततः ।

पत्रलेखा--पुणो वि तीए भणिदं गयदिअये व्विअ सह सहीहिं केलिवणाविणिवुत्तमित्ताए तीए अंगेसु स कोवि संदावो आसि । जं णयणलक्खिदं पि ण साहिदुं पारेमि । जेण सयलं पि रयणिं पि,

न पडइ घणवट्टे अच्छिपिच्छेहिं मुक्कं
छमछमिदकवोलावट्टिदं बाहवारि ॥
अविणिअ विसरिल्लुत्तत्तणीसासफंसे
उवक्किवमकिआसे वेवए अंगलच्छी ॥ ३९ ॥

( पुनरपि तया भाणितं गतदिवसे एव सह सखीभिः केलि-वनविनिवृत्तमात्रायास्तस्या अङ्गेषु स कोपि सन्ताप आसीत् । यं नयनलक्षितमपि न सोढुं पारयामि । येन सकलामपि रजनीमपि, )

न पतति घनपट्टे अक्षिपक्ष्मभिर्मुक्तं
छमछमितकपोलावर्तितं बाष्पवारि ।

अविनीय विस्रम्भरोत्तसानिःश्वासस्पर्शो
+ + + + + + वेपते अङ्गलक्ष्मीः ॥ ३९ ॥

अर्जुनः—( सादरं ) ततस्ततः ।

पत्रलेखाः—तदो अ 'जाणासि सहि किंणु इत्थ कारणं' ति अणुजुत्ताए तीए भणिदं 'सहि निउणं ण जाणे यदि केलिवणविहारपरिस्समो अदिट्ठदोसो वा कोवि' ।

( ततश्च 'जानासि सखि किंन्वत्र कारण'मिति अनुयुक्तया तया भणितम् 'सखि ! निपुणं न जाने यदि केलिवनविहारपरिश्रमो ऽदृष्टदोषो वा कोऽपि' ) ।

अर्जुनः—ततस्ततः ।

पत्रलेखा—तदो मए निहुअं हसिऊण भणिदं, 'सहि अण्णं पि किं पि संभावीयदि' ।

( ततो मया निभृतं हसित्वा भणितम् , 'सखि ! अन्यदपि किमपि सम्भाव्यते' ) ।

अर्जुनः—( साशङ्कं ) ततस्ततः ।

पत्रलेखा—तदो अ सुणिअ मणोगदाए अभिहिदं, अवि संभावीयदि । एतारिसे अवत्थतंरे किं पुण णिविडलज्जा-जवणियंतारिअं बालियाण हिअथगयं केण लक्खीयदि । जत्थ भयवं मंमहो वि जाणिअमोहव्वमोहविक्कमो भादि ।

( ततश्च श्रुत्वा मनोगतया ऽभिहितम् , अपि सम्भाव्यते । एतस्मिन्नवस्थान्तरे किं पुनर्निबिडलज्जाजवनिकान्तरितं बालिकानां हृदयगतं केन लक्ष्यते । यत्र भगवान् मन्मथोऽपि जनितमोहव्यामोह-विक्रमो भाति ) ।

अर्जुनः—ततस्ततः ।

पत्रलेखा—तदो मए भणिदं, कहिं पुण संपदि पट्ठिदा पिअसही ।

( ततो मया भणितम् ,कुत्र पुनः सम्प्रति प्रस्थिता प्रियसखी ) ।

अर्जुनः—ततस्ततः ।

पत्रलेखा—निवेदिदं तीए, अज्ज मज्झण्णे संकिददोसोव-समकारणेण णयणपेरंतमंडणचंडिआयदणं सुभद्दा समं कुलमह-त्तरीहिं गमिस्सदित्ति तदुवहारमेलणपउत्ता अज्ज पुणो वि तं विअ विलासवणं सह सहीहि भट्टदारिआ गदित्ति सुणिअ पज्जाउत्तम्हि ।

( निवेदितं तया. अद्य मध्याह्ने शङ्कितदोषोपशमकारणेन नयन-पर्यन्तमण्डनचण्डिकायतनं सुभद्रा समं कुलमहत्तरीभिर्गमिष्यतीति तदुपहारमेलनप्रवृत्ता अद्य पुनरपि तदेव विलासवनं सह सखीभिर्भ-र्तृदारिका गतेति श्रुत्वा पर्यावृत्ताऽस्मि ।

अर्जुनः—ततस्ततः ।

पत्रलेखा—तदो अ सहि समीहिदं साहेसुत्ति भणिअ वुत्तंतमिमं विन्नवेदुं देवस्स चरणमूलमागदह्मि । ( ततश्च सखि ! समीहितं साधयस्वेति भणित्वा वृत्तान्तमिमं विज्ञापयितुं देवस्य चरण-मूलमागताऽस्मि । )

अर्जुनः—( स्वगतं )

दिष्ट्या ज्ञाताऽथ किं वा क्षममिह विरहं हा कथं वाऽस्मि सोढा
रे चेतः के तवामी स्पृहाभरतिरया हन्त दृश्येत साऽपि।
किं वा वक्ष्ये मुरारिं क नु रभसचलद्ग्रीवमुद्वीक्षितं तत
हर्तुं शक्तः किमेतामहह मयि रणे यादवाः के वराकाः॥४१॥

( प्रकाशं ) अयि पत्रलेखे ! क्व च न पुनर्दृश्यते ऽपि ?

पत्रलेखा—णं पत्ता सह सहीहिं केलिवणं । ( ननु प्राप्ता सह सखीभिः केलिवनम् ) ।

अर्जुनः—( सौत्सुक्यं ) निवेदय तदुद्यानगामिनं मार्गम् ।

पत्रलेखा--( पुरोभूय ) इद इदो देवो । ( इत इतो देवः )

( इति सर्वे परिक्रामन्ति )

पत्रलेखा—एदं तं केलिवणं । ( एतत्तत्केलिवनम् )

( इति सर्वे प्रवेशं नाटयन्ति )

सुनीतिः—( समन्तादवलोक्य )

विलसदलसलीलं मन्दमान्दोलनाभिः
प्रसृमरमधुगन्धं पल्लवापाटलश्रि ।

अलिकुलकलगुञ्जागद्गदालापमेत—
त्प्रमदवनमिदानीं नाम धत्ते यथार्थम् ॥ ४२ ॥

पत्रलेखा—( ससम्भ्रमं हस्तसंज्ञया सुनीतिं निवारयन्ती निभृतपदं परानुवृत्त्य )

अये मन्दं कहेसु । ( अये मन्दं कथयस्व )

अर्जुनः—कथमिव ?

पत्रलेखा—( नेपथ्याभिमुखं हस्तेन दर्शयन्ती ) इदो ज्जेव नादिदूरे कुसुमाइं उच्चिणन्ती सहीहिं परिवुदा सा कंणयारयणं सुभद्दा विहरदि । कदा वि अत्ताणं कलयलं निसुणिअ गहीद-सम्भमा अण्णदो गच्छेइ । ( इत एव नातिदूरे कुसुमान्युच्चिन्वती सखीभिः परिवृता सा कन्यकारण्यं सुभद्रा विहरति । कदाचिदा-त्मनां कलकलं निश्रुत्य गृहीतसम्भ्रमा अन्यतो गच्छेत् । )

अर्जुनः—साधु समर्थयसे । इहैव कुरवकवीथिकान्तरिता निभृतं द्रक्ष्यामः ।

( इति सर्वे सकौतुकमालोकयन्ति । )

( ततः प्रविशति यथानिर्दिष्टा सुभद्रा सख्यश्च । )

सुभद्रा—( सखेदालसं किञ्चित्परिक्रम्य स्वगतं )

उवदिसइ अणङ्गो किं पि जं जं रहस्सं
ण हु सुणइ मणो तं केण मन्तीय दीहं ।

अणुदिणमणुराउं वड्ढए का वि लज्जा
गुरुयणवसगा हीं किं करिस्सं हदम्हि ॥ ४३ ॥

( उपदिशति अनङ्गः किमपि यद्यद्रहस्यं
न खलु शृणोति मनस्तत् केन मन्त्रयेयं दीर्घम् । ?
अनुदिनमनुरागो वर्द्धते काऽपि लज्जा
गुरुजनवशगा ही किं करिष्ये हतास्मि ॥ )

( इति चिन्तां नाटयति । )

बकुलमाला—( अपवार्य ) हला लवङ्गिए पेक्खसि एव्व सहीए अवच्छं । ण हु सुणइ किं पि भणिअं । पुरा उव्विण्ण-पेक्खएण साहेइं णिट्ठुरविसरिल्लसासागाणिकरसा कुंरगत्थी ।

( हला लवङ्गिके प्रेक्षस एव सख्या अवस्थाम् । न खलु शृणोति किमपि भणितम् । + + + + + + + )

( अर्जुनः सोत्कण्ठं पश्यति )

विजयसेनः—( लतान्तरेण निरूप्य सुनीतिं प्रति जनान्तिकम् ) युक्तमपहृतमनया मनो देवस्य । तरलयति हि महोदधिं कौमुदी ।

लवङ्गिका—सहि पेक्खामि २ किं करीयदि अत्तणो अगोअरे अत्थे । तह वि किं पि उवक्खिवामि । (सुभद्रां प्रति) भट्टिदारिए इदो दाव देसु दिट्ठिं । ( सखि ! पश्यामि २ किं क्रियते आत्मनो ऽगोचरे ऽर्थे । तथाऽपि किमप्युपक्षिपामि । भर्तृदारिके ! इतस्तावत् देहि दृष्टिम् । )

जो एसो । ( य एषः )

उक्कण्ठाभरकारिणा महुरसेणापूरिअब्भन्तरा
सेयं पेक्खिअ चंपअस्स कलिआ मीसिव्वहासम्मुहिं।
उप्फुल्लासु लदासु मत्तभमरो मुत्तूण केलीरसं
दूरादेव विसारिणा परिमलेणालुद्धअं धावदि ॥४४॥

( उत्कण्ठाभरकारिणा मधुरसेनापूरिताभ्यन्तरा
सेयं प्रेक्ष्य चम्पकस्य कलिकामीषद् विकासोन्मुखीम् ? ।
उत्फुल्लासु लतासु मत्तभ्रमरो मुक्त्वा केलीरसं
दूरादेव विसारिणा परिमलेनालुब्धकं धावति ॥ )

अर्जुनः—( साशङ्कं पत्रलेखां प्रति ) कथमियमुद्दिश्य मामन्योक्तिमभिदधाति ।

पत्रलेखा—णं क्खु २ चतुरवयणंमि दप्पणतलवज्जधा पेक्खियदि तधा २ दीसदि । ( न खलु २ चतुरवचने दर्पणतलवद्यथा प्रेक्ष्यते तथा तथा दृश्यते । )

सुभद्रा—हंजे ! लवङ्गिए कहिं सा कलिएत्ति । ( सखि ! लवङ्गिके ! कुत्र सा कलिकेति ) ( लवङ्गिकयोपदिश्यमाना कलहंसिकाकरमवलम्ब्य व्यस्तालसपदं परिक्रामति । )

सुभद्रा—( कलिकामवलोकयन्ती कोकिलारवश्रुतिमभिनीय सत्रासोत्कम्पं ) सहि ! किं अवरद्धं मए । जं एसा कलिया कोवारुणणयणा णिरन्तरं दूसहवयणेहि मं दूहवेइ । ( सखि ! कि-

मपराद्धं मया, यदेषा कालिका कोपारुणनयना निरन्तरं दुःसहवचनैर्मां दुःखयति ।)

( इति कर्णौ पिदधाति । )

मालतिका—( जनान्तिकं ) हला लवङ्गिए उत्तासेहि एदं दुट्ठपक्खिणिम् । ( उत्त्रासयैतां दुष्टपक्षिणीम् । )

( लवङ्गिका शाखाधूननं नाटयति । )

सुभद्रा--( वपुषि पुष्पपतनमभिनीय सभयसम्भ्रममपसरन्ती ) हा २ परित्ताय २ सो अदिनिग्घिणहिअयो मम्महो रुणरुणिअचावमुक्केहिं विसलित्तेहिं सरेहिं असरणं मं सव्वङ्गं पहरादि । ( हा हा परित्रायस्व २ सोऽतिनिर्घृणहृदयो मन्मथो रुणरुणितचापमुक्तैर्विषलिप्तैः शरैरशरणां मां सर्वाङ्गं प्रहरति । )

अर्जुनः—( ससम्भ्रमौत्सुक्यं ) अयि विजयसेन ! धनुर्धनुः, निहन्मि तावदेनं प्रियापरिभाविनं मदनहतकम् ।

( इत्यावेगं नाटयति । )

विजयसेनः—स्वामिन् ! अलमलं संरम्भेण । कुतोऽत्र कामहतकः ? विरहवैक्लव्यमेतत् ।

( अर्जुनः किञ्चित्सलज्जं पुरस्तथैव विलोकयति । )

बकुलमाला—अयि ! भट्टिदारिए ! ण एदे विसलित्ता सरा, किं पुण कोइलुत्तासकारणेण लवङ्गिआए गाहिऊण तिलयसाहं रणरणिअघणकङ्कणं धुणन्तीए गन्धलुद्धभमरा णिवअइ

कुसुमाउली एसा। ( अयि भर्तृदारिके ! नैते विषलिप्ताः शराः किं पुनः कोकिलोत्त्रासकारणेन लवङ्गिकया गृहीत्वा तिलकशाखां रणरणित घनकङ्कणं धुन्वन्त्या गन्धलुब्धभ्रमरा निपतति कुसुमावल्येषा। )

सुभद्रा—( सदैन्यं ) अयि सहीओ कीस अ कारणं मं विप्पयारेसि। णं जाणन्ति वेअणाजज्जरिज्जंताइं एदाइं अङ्गाइं। ( अयि सख्यः ! कीदृशमकारणं मां विप्रकारयन्ति। ननु जानन्ति वेदनाजर्जरीक्रियमाणान्येतान्यङ्गानि। )

( इति मदनवेदनां नाटयति। )

लवङ्गिकाः—अयि भट्टिदारिए उब्भिन्ननवकुसुममहुमत्तमहुअरमहुरझंकारमुहरो सिहरचलिअबालपल्लवपब्भारभासुरसिरी रत्तासोअपायवो दीसई। ता एणं अणुसरउ पिअसही। ( अयि भर्तृदारिके ! उद्भिन्ननवकुसुममधुमत्तमधुकरमधुरझङ्कारमुखरः शिखरचलितबालपल्लवप्राग्भारभासुरश्री रक्ताशोकपादपो दृश्यते। तदेनमनुसरतु प्रियसखी। )

सुभद्रा—( कतिचित्पदानि दत्वा विलोक्य सत्रासमुत्तरीयाञ्चलेन नयनपथं तिरयन्ती सरभसं परावृत्य हस्तेन निदर्शयन्ती )

कलियविसमकोवो वम्महो हुंकिदीहिं
परिहवइ कहं मं पेक्खए देयतिस्स।
विरहिहि अयासित्तिप्फाडणुज्जमारिल्ला
बहुलरुहिरलित्ता कंकवत्ता प्फुरंति॥ ४९॥

